चायं वर्णकः–' समचउरंससंठाणसंठिए वज्जरिसहनारायसंघयणे ' त्ति विशेषणद्वयमपीदमागमसिद्धं ' कणगपुलगनिघसपम्हगोरे ' कनकस्य–सुवर्णस्य यः पुलको–लवस्तस्य यो निकषः–कषपट्टे रेखालक्षणः तथा ' पम्ह 'त्ति पद्मगर्भस्तद्वद् गौरो यः स तथा, ' तत्ततवे ' तप्तं–तापितं तपो येन स तथा, एवं हि तेन तपस्तप्तं येन कर्माणि संताप्य तेन तपसा स्वात्माऽपि तपोरूपः संतापितो यतोऽन्यस्यासंस्पृश्यमिव जातमिति, ' महातवे ' प्रशस्ततपाः बृहत्तपा वा, ' उराले ' भीमः अतिकष्टतपःकारितया पार्श्ववर्त्तिनामल्पसत्त्वानां भयजनकत्वादुदारो वा प्रधान इत्यर्थः ' घोरः ' निर्घृणः परीषहाद्यरातिविनाशे ' घोरगुणे ' अन्यैर्दुरनुचरगुणः ' घोरतवस्सी ' घोरैस्तपोभिस्तपस्वी ' घोरबंभचेरवासी ' घोरे–अल्पसत्त्वदुरनुचरत्वेन दारुणे ब्रह्मचर्ये वस्तुं शीलं यस्य स तथा ' उच्छूढसरीरे ' उच्छूढम्–उज्झितमिव उज्झितं शरीरं येन तत्प्रतिकर्मत्यागात् ' संखित्तविउलतेउलेस्से ' संक्षिप्ता शरीरान्तर्वर्तिनीत्वाद्विपुला च–विस्तीर्णा अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्थत्वात् तेजोलेश्या–विशिष्टतपोजन्यलब्धिविशेषप्रभवा तेजोज्वाला यस्य स तथा ' उड्ढंजाणू ' शुद्धपृथिव्यासनवर्जनात् औपग्रहिकनिषद्याया अभावाच्च उत्कटुकासनः सन्नुपदिश्यते ऊर्ध्वे जानुनी यस्य स ऊर्ध्वजानुः ' अहोसिरो ' अधोमुखो नोर्ध्वं तिर्यग्वा विक्षिप्तदृष्टिरिति भावः ' झाणकोट्ठोवगए ' ध्यानमेव कोष्ठो ध्यानकोष्ठस्तमुपगतो यः स तथा ' विहरइ 'त्ति ' संजमेणं तवसा अप्पाणं भावेमाणे विहरइ ' इत्येवं दृश्यं, ' जायसड्ढे ' प्रवृत्तविवक्षितार्थश्रवणवाञ्छः, यावत्करणादिदं दृश्यं ' जायसंसए ' प्रवृ-

त्तानिर्द्धारितार्थप्रत्ययः 'जायकोउहल्ले' प्रवृत्तश्रवणौत्सुक्यः ३ 'उत्पन्न-सड्ढे' प्रागभवदुद्भूतश्रवणवाञ्छः, उत्पन्नश्रद्धत्वात् प्रवृत्तश्रद्धः इत्येवं हेतुफलविवक्षणान्न पुनरुक्तता, एवं उप्पन्नसंसए उप्पन्नकोउहल्ले ३ संजायसड्ढे संजायसंसए संजायकोउहल्ले ३ समुप्पन्नसड्ढे समुप्पन्नसंसए समुप्पन्नकोउहल्ले ३' व्यक्तार्थानि, नवरमेतेषु पदेषु संशब्दः प्रकर्षादिवचनः। अन्ये त्वाहुः—'जातश्रद्धो' जातप्रश्नवाञ्छः १, सोऽपि कुतो ?, यतो जातसंशयः २, सोऽपि कुतो ?, यतो जातकुतूहलः ३, अनेन पदत्रयेणावग्रह उक्तः, एवमन्येन पदानां त्रयेण त्रयेण ईहा १ वाय २ धारणा ३ उक्ता भवन्तीति, 'तिक्खुत्तो'त्ति 'त्रिकृत्वः' त्रीन् वारान् 'आयाहिण' त्ति आदक्षिणात्—दक्षिणपार्श्वादारभ्य प्रदक्षिणो—दक्षिणपार्श्ववर्ती आदक्षिणप्रदक्षिणोऽतस्तं 'वंदइ'त्ति स्तुत्या 'नमंसइ'त्ति नमस्यति प्रणामतः ॥

इह यावत्करणादिदं दृश्यं 'सुस्सूसमाणे नमंसमाणे विणएणं पंजलिउडे अभिमुहे'त्ति व्यक्तं च ॥

[पृ. ४] '**दुहविवागा य**'त्ति 'दुःखविपाकाः' पापकर्मफलानि दुःखानां वा—दुःखहेतुत्वात् पापकर्मणां विपाकास्ते यत्राभिधेयतया सन्त्यसौ '**वरणाणगर**' मिति न्यायेन दुःखविपाकाः—प्रथमश्रुतस्कन्धः, एवं द्वितीयः सुखविपाकाः, '**तए णं**'ति ततः—अनन्तरमित्यर्थः ॥

'**मियउत्ते**' इत्यादिगाथा, तत्र '**मियउत्ते**'ति मृगापुत्राभिधानराजसुतवक्तव्यताप्रतिबद्धमध्ययनं मृगापुत्र एव १, एवं सर्वत्र,

नवरम् ' **उज्झियए** 'त्ति उज्झितको नाम सार्थवाहपुत्रः २, ' **अभग्ग** ' त्ति सूत्रत्वादभग्नसेनो विजयाभिधानचौरसेनापतिपुत्रः ३, ' **सगडे** 'त्ति शकटाभिधानसार्थवाहसुतः ४, ' **बहस्सइ** 'त्ति सूत्रत्वादेव बृहस्पतिदत्तनामा पुरोहितपुत्रः ५, ' **नंदी** ' त्ति सूत्रत्वादेव नन्दिवर्द्धनो राजकुमारः ६, ' **उंबर** 'त्ति सूत्रत्वादेव उदुम्बरदत्तो नाम सार्थवाहसुतः, ' **सोरियदत्ते** ' शौरिकदत्तो नाम मत्स्यबन्धपुत्रः ८, चशब्दः समुच्चये '**देवदत्ता य**'त्ति देवदत्ता नाम गृहपतिसुता ९, चः समुच्चये '**अंजू य**' त्ति अञ्जूनामसार्थवाहसुता १०, चशब्दः समुच्चये, इति गाथासमासार्थः, विस्तरार्थस्तु यथास्वमध्ययनार्थावगमादवगम्य इति ॥

' **एवं खलु** 'त्ति ' **एवं** ' वक्ष्यमाणप्रकारेण ' **खलु** ' वाक्यालङ्कारे ' **सव्वोउयवण्णओ** 'त्ति सर्वर्तुककुसुमसंछन्ने नंदणवणप्पगासे इत्यादिरुद्यानवर्णको वाच्य इति, ' **चिराइए** 'त्ति चिरादिकं–चिरकालीनप्रारम्भमित्यादिवर्णकोपेतं वाच्यं, यथा पूर्णभद्रचैत्यमौपपातिके ।

**[पृ. ५]** ' **अहीणवन्नओ** 'त्ति ' अहीणपुन्नपंचिंदियसरीरे ' इत्यादिवर्णको वाच्यः ' **अत्तए** 'त्ति आत्मजः—सुतः ' **जाइअंधे** ' त्ति जात्यन्धो—जन्मकालादारभ्यान्ध एव ' **हुंडे य** 'त्ति हुण्डकश्च सर्वावयवप्रमाणविकलः । ' **वायव्वे** 'त्ति वायुरस्यास्तीति वायवो—वातिक इत्यर्थः, ' **आगिई आगिइमेत्ते** 'त्ति अङ्गावयवानामाकृतिः—आकारः किंविधा ? इत्याह—आकृतिमात्रं—आकारमात्रं नोचितस्वरूपमित्यर्थः ॥

'**रहस्सियं**'ति राहसिके जनेनाविदिते '**फुट्टहडाहडसीस**'त्ति स्फुटितकेशसंचयत्वेन विकीर्णकेशं '**हडाहडं**'ति अत्यर्थं शीर्षं–शिरो यस्य स तथा, '**मच्छियाचडकरपहयरेणं**'ति मक्षिकाणां प्रसिद्धानां चटकरप्रधानो–विस्तरवान् यः प्रहकरः–समूहः स तथा अथवा मक्षिका-चटकराणां–तद्वृन्दानां यः प्रहकरः स तथा तेन '**अणिज्जमाणमग्गे**'त्ति 'अन्वीयमानमार्गः' अनुगम्यमानमार्गः, मलाविलं हि वस्तु प्रायो मक्षि-काभिरनुगम्यत एवेति '**कालुणवडियाए**'त्ति कारुण्यवृत्त्या '**वित्तिं कप्पेमाणे**'त्ति जीविकां कुर्वाणः ॥

'**जाव समोसरिए**'त्ति इह यावत्करणात् 'पुव्वाणुपुव्विं चर-माणे गामाणुगामं दूइज्जमाणे' इत्यादिवर्णको दृश्यः, 'तं महया जणसद्दं च'त्ति सूत्रत्वान्महाजनशब्दं च, इह यावत्करणात् 'जणवूहं च जणबोलं चे' त्यादि दृश्यं, तत्र जनव्यूहः–चक्राद्याकारः समूहस्तस्य शब्दस्तद्-भेदाज्जनव्यूह एवोच्यतेऽतस्तं बोलः–अव्यक्तवर्णो ध्वनिरिति ॥

'**इंदमहे इ व**'त्ति इन्द्रोत्सवो वा, इह यावत्करणात् 'खंदमहे वा रुद्दमहे वा जाव उज्जाणजत्ता इ वा, जन्नं बहवे उग्गा भोगा जाव एगदिसिं एगाभिमुहा' इति दृश्यम्, इतो यद्वाक्यं तदेवमनुसर्त्तव्यं, सूत्रपुस्तके सूत्राक्षराण्येव सन्तीति, 'तए णं से पुरिसे तं जाइअंधपु-रिसं एवं वयासी–नो खलु देवाणुप्पिया ! अज्ज मियग्गामे नयरे इंदमहे इ वा जाव जत्ता इ वा जन्नं एए उग्गा जाव एगदिसिं एगाभिमुहा णिग्गच्छंति, एवं खलु देवाणुप्पिया ! समणे भगवं महावीरे जाव इह समागए इह संपत्ते इहेव मियग्गामे णगरे मिगवणुज्जाणे अहापडिरूवं

उग्गहं उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे विहरइ, तए णं से अंधपुरिसे तं पुरिसं एवं वयासी ' इति ॥

[ पृ. ६. ] '**विजयस्स तीसे य ' धम्म** ' त्ति इदमेवं दृश्यं ' विजयस्स रन्नो तीसे य महइमहालियाए परिसाए विचित्तं धम्ममाइक्खइ जहा जीवा बज्झंती ' त्यादि परिषद् यावत् परिगता '**जाइअंधे**'त्ति जातेरारभ्यान्धो जात्यन्धः, स च चक्षुरुपघातादपि भवतीत्यत आह—' **जायअंधारूवे** ' त्ति जातं—उत्पन्नमन्धकं—नयनयोरादित एवानिष्पत्तेः कुत्सिताङ्गं रूपं—स्वरूपं यस्यासौ जातान्धकरूपः ॥

' **अतुरियं** ' ति अत्वरितं मनःस्थैर्यात्, यावत्करणादिदं दृश्यम्—' अचवलमसंभंते जुगंतरपलोयणाए दिट्ठीए पुरओ रियं ' ति तत्राचपलं—कायचापल्याभावात् क्रियाविशेषणे चैते, तथा ' असंभन्त ' भ्रमरहितः युगं—यूपस्तत्प्रमाणो भूभागोऽपि युगं तस्यान्तरे—मध्ये प्रलोकनं यस्याः सा तथा तया दृष्ट्या—चक्षुषा ' **रियं** 'ति ईर्या—गमनं तद्विषयो मार्गोऽपीर्याऽस्तां ' **जेणेव** ' त्ति यस्मिन् देशे ॥

[ **पृ. ७.** ] ' **हट्ठ जाव** 'त्ति इह ' हट्ठतुट्ठमाणंदिए ' इत्यादि दृश्यम्, एकार्थाश्चैते शब्दाः ॥

' **हव्वं** 'ति शीघ्रम् ॥

' **जओ णं** 'ति यस्मात् ॥

' **जाया यावि होत्था** ' चाप्यभवदित्यर्थः ॥

[ **पृ. ८.** ] ' **वत्थपरियट्टं** 'ति वस्त्रपरिवर्तनम् ॥

'**से जहानामए**' त्ति तद्यथा नामेति वाक्यालङ्कारे ।

'**अहिमडे इ वा सप्पकडेवरे इ वा**' इह यावत्करणात् 'गोमडे इ वा सुणहमडे इ वा' इत्यादि द्रष्टव्यम् ॥

'**तओ वि णं**'ति ततोऽपि—अहिकडेवरादिगन्धादपि ॥

'**अणिट्ठतराए चेव**'त्ति अनिष्टतर एव गन्ध इति गम्यते, इह यावत्करणात् 'अकंततराए चेव अपियतराए चेव अमणुन्नतराए चेव चेव अमणामतराए चेव'त्ति दृश्यम्, एकार्थाश्चैते । '**मुच्छिए**' इत्यत्र 'गढिए गिद्धे अज्झोववन्ने' इति पदत्रयमन्यद् दृश्यम, एकार्थान्येतानि चत्वार्यपीति ॥

'**अज्झत्थिए**' इत्यत्र 'चिंतिए कप्पिए पत्थिए मणोगए संकप्पे' इति दृश्यम्, एतान्यप्येकार्थानि ।

'**पुरापोराणाणं दुच्चिन्नाणं**' इहाक्षरघटना 'पुराणानां' जरठानां कक्खरडीभूतानामित्यर्थः '**पुरा**' पूर्वकाले '**दुश्चीर्णानां**' प्राणातिपातादिदुश्चरितहेतुकानां 'दुप्पडिक्कंताणं' ति दुःशब्दोऽभावार्थस्तेन प्रायश्चित्तप्रतिपत्त्यादिना अप्रतिक्रान्तानां—अनिवर्तितविपाकानामित्यर्थः, '**असुभाणं**'ति असुखहेतूनां 'पावाणं'ति पापानां दुष्टस्वभावानां 'कम्माणं'ति ज्ञानावरणादीनाम् ॥

[ **पृ. ९.** ] 'पुव्वभवे के आसि' इत्यत एवमध्येयं—'किंनामए वा किंगोत्ते वा' तत्र नाम—यादृच्छिकमभिधानं गोत्रं तु—यथार्थकुलं वा 'कयरंसि गामंसि वा नगरंसि वा किं वा दच्चा किं वा मोच्चा किं वा

समायरेत्ता केसिं वा पुरापोराणाणं दुच्चिन्नाणं दुप्पडिक्कंताणं असुहाणं पावाणं कम्माणं पावगं फलवित्तिविसेसं पच्चणुब्भवमाणे विहरइ 'त्ति ॥

'गोयमा इ 'त्ति गौतम इत्येवमामन्त्र्येति गम्यते ॥

'**रिद्धित्थिमिए**'त्ति ऋद्धिप्रधानं स्तिमितं च–निर्भयं यत्तथा, 'वण्णओ 'त्ति नगरवर्णकः, स चौपपातिकवद्द्रष्टव्यः, '**अदूर–सामंते**' त्ति नातिदूरे न च समीपे इत्यर्थः, '**खेडे**'त्ति धूलीप्राकारं ॥ '**रिद्ध**' त्ति 'रिद्धत्थिमियसमिद्धे' इति द्रष्टव्यम्; '**आभोए**'त्ति विस्तारः '**रट्ठउडे**'त्ति राष्ट्रकूटो–मण्डलोपजीवी राजनियोगिकः ॥

'**अहम्मिए**'त्ति अधार्म्मिको यावत्करणादिदं दृश्यम्–' अधम्माणुए अधम्मिट्ठे अधम्मपलोई अधम्मपलज्जणे अधम्मसमुदाचारे अधम्मेणं चेव वित्तिं कप्पेमाणे दुस्सीले दुव्वए ' त्ति तत्र अधार्मिकत्वप्रपञ्चनायोच्यते–' अधम्माणुए ' अधर्म्म–श्रुतचारित्राभावं अनुगच्छतीत्यधर्म्मानुगः; कुत एतदेवमित्याह–अधर्म्म एव इष्टो–वल्लभः पूजितो वा यस्य सोऽधर्म्मिष्ठः अतिशयेन वाऽधर्म्मी–धर्म्मवर्जित इत्यधर्म्मिष्ठः, अत एवाधर्माख्यायी–अधर्म्मप्रतिपादकः अधर्मख्यातिर्वा–अविद्यमान धर्मोऽयमित्येवंप्रसिद्धिकः, तथाऽधर्म्मं प्रलोकयति–उपादेयतया प्रेक्षते यः स तथा, अत एवाधर्मप्ररजनः–अधर्मरागी अत एवाधर्मः समुदाचारः–समाचारो यस्य स तथा, अत एवा धर्मेण–हिंसादिना वृत्तिं–जीविकां कल्पयन् सन् दुःशीलः–शुभस्वभावहीनः दुर्व्रतश्च–व्रतवर्जितः दुष्प्रत्यानन्दः–साधुदर्शनादिना नानन्धन्त इति ॥

[ पृ. १०. ] '**आहेवच्चं**'ति अधिपतिकर्म्म, यावत्करणादिदं दृश्यं—पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे'त्ति तत्र पुरोवर्तित्वं—अग्रेसरत्वं स्वामित्वं—नायकत्वं भर्तृत्वं—पोषकत्वं महत्तरकत्वं—उत्तमत्वं आज्ञेश्वरस्य—आज्ञाप्रधानस्य यत्सेनापतित्वं तदाज्ञेश्वरसेनापत्यं कारयन्—नियोगिकैर्विधापयन् पालयन् स्वयमेवेति ॥

'**करेहि य**'त्ति करैः—क्षेत्राद्याश्रितराजदेयद्रव्यैः 'भरेहि य'त्ति तेषामेव प्राचुर्यैः, '**विद्धीहि य**'त्ति वृद्धिभिः—कुटुम्बिनां वितीर्णस्य धान्यस्य द्विगुणादेर्ग्रहणैः, वृत्तिभिरिति क्वचित्, तत्र वृत्तयो—राजादेशकारिणां जीविकाः ?, '**उक्कोडाहि य**'त्ति लञ्चाभिः '**पराभएहि य**' त्ति पराभवैः '**देज्जेहि य**' अनाभवद्दातव्यैः '**भेज्जेहि य**' त्ति कुन्तकम्—एतावद्द्रव्यं त्वया देयमित्येवं नियन्त्रणया नियोगिकस्य देशादेर्यत्समर्प्पणमिति, '**लंछपोसेहि य**'त्ति लञ्छाः—चौरविशेषाः संभाव्यन्ते तेषां पोषाः—पोषणानि तैः, '**आलीवणेहि य**'त्ति व्याकुललोकानां मोषणार्थं ग्रामादिप्रदीपनकैः '**पंथकोट्टेहि य**'त्ति सार्थघातैः '**उवीलेमाणे**'त्ति अवलीपयन्—बाधयन् ॥

'**विहम्मेमाणे**'त्ति विधर्म्मयन्—स्वाचारभ्रष्टान् कुर्वन् '**तज्जमाणे**' त्ति कृतावष्टम्भान् तर्जयन्—ज्ञास्यथ रे यन्मम इदं च इदं च न दत्स्वेत्येवं भेषयन् '**तालेमाणे**' त्ति कशाचपेटादिभिस्ताडयन् '**निद्धणे करेमाणे**'त्ति निर्धनान् कुर्वन् विहरति ॥

'तए णं से इक्काई रट्ठकूडे विजयवद्धमाणस्स खेडस्स सत्कानां बहूणं राईसरतलवरमाडंबियकोडुंबियसेट्ठिसत्थवाहाणं' इह '**तलवराः**'—

राजप्रसादवन्तो राजोत्थसैनिकाः '**माडम्बिकाः**' मडम्बाधिपतयो मडम्बं च—योजनद्वयाभ्यन्तरेऽविद्यमानग्रामादिनिवेशः सन्निवेशविशेषः शेषाः प्रसिद्धाः, ॥

'**कज्जेसु**' त्ति कार्येषु—प्रयोजनेषु अनिष्पन्नेषु '**कारणेसु**'त्ति सि साधयिषितप्रयोजनोपायेषु विषयभूतेषु ये मन्त्रादयो व्यवहारान्तास्तेषु, तत्र मन्त्राः—पर्यालोचनानि गुह्यानि—रहस्यानि निश्चयाः—वस्तुनिर्णयाः व्यवहाराः—विवादास्तेषु विषयेषु ॥

'**एयकम्मे**' एतद्व्यापारः एतदेव वा काम्यं—कमनीयं यस्य स तथा, '**एयप्पहाणे**' त्ति एतत्प्रधानः एतन्निष्ठा इत्यर्थः, '**एयविज्जे**' त्ति एषैव विद्या—विज्ञानं यस्य स तथा '**एयसामायारे**' त्ति एतज्जीतकल्प इत्यर्थः '**पावकम्मं**' ति अशुभं—ज्ञानावरणादि '**कलिकलुसं**' ति कलहहेतुकलुषं मलीमसमित्यर्थः ॥

'**जमगसमगं**'ति युगपत् '**रोगायंक**' त्ति रोगा—व्याधयस्त एवातङ्काः—कष्टजीवितकारिणः । '**सासे**' इत्यादि श्लोकः, '**जोणिसूले**' त्ति अपपाठः 'कुच्छिसूले' इत्यस्यान्यत्र दर्शनात्, '**भगंदले**'त्ति भगन्दरः '**अकारए**' त्ति अरोचकः, '**अच्छिवेयणा**' इत्यादि श्लोकातिरिक्तं, '**उदरे**' त्ति जलोदरं । शृङ्गाटकादयः स्थानविशेषाः ।

[ पृ. ११ ] '**विज्जो**' त्ति वैद्यशास्त्रे चिकित्सायां च कुशलः '**विज्जपुत्तो व**'त्ति तत्पुत्रः '**जाणुओ व**'त्ति ज्ञायकः—केवलशास्त्रकुशलः '**तेगिच्छिओ व**'त्ति चिकित्सामात्रकुशलः '**अत्थसंपयाणं दलयइ**'त्ति अर्थदानं करोतीत्यर्थः,

'**सत्थकोसहत्थगय**'त्ति शस्त्रकोशो—नखरदनादिभाजनं हस्ते गतो—व्यवस्थितो येषां ते तथा ॥

'**अवद्दहणाहि य**' त्ति दम्भनैः '**अवण्हाणेहि य**' त्ति तथाविधद्रव्यसंस्कृतजलेन स्नानैः '**अणुवासणाहि य**' त्ति अपानेन जठरे तैलप्रवेशनैः '**बत्थिकम्मेहि य**'त्ति चर्म्मवेष्टनप्रयोगेण शिरः—प्रभृतीनां स्नेहपूरणैः गुदे वा वर्त्यादिक्षेपणैः '**निरुहेहि य**' त्ति निरुहः—अनुवास एव केवलं द्रव्यकृतो विशेषः '**सिरावेहेहि य**' त्ति नाडीवेधैः '**तच्छणेहि य**'त्ति क्षुरादिना त्वचस्तनूकरणैः '**गेहिपच्छहि य**'त्ति ह्रस्वैस्त्वचो विदारणैः '**सिरोबत्थीहि य**'त्ति शिराबस्तिभिः शिरसि बद्धस्य चर्मकोशकस्य द्रव्यसंस्कृततैलाधारपूरणलक्षणाभिः, प्रागुक्तबस्तिकर्म्माणि सामान्यानि अनुवासना निरुहशिरोबस्तयस्तु तद्भेदाः '**तप्पणाहि य**' त्ति तर्प्पणैः स्नेहादिभिः शरीरबृंहणैः '**पुडपागेहि य**' त्ति पुटपाकाः—पाकविशेषनिष्पन्ना औषधिविशेषाः '**छल्लीहि य**' त्ति छल्लयो—रोहिणीप्रभृतयः

'**सिलियाहि य**'त्ति शिलिकाः—किराततिक्तकप्रभृतिकाः '**गुलियाहि य**' त्ति द्रव्यवटिकाः '**ओसहेहि य**' त्ति औषधानि—एकद्रव्यरूपाणि '**भेसज्जेहि य**' त्ति भैषज्यानि—अनेकद्रव्ययोगरूपाणि पथ्यानि चेति ।

[ पृ. १२ ] '**संत**'त्ति श्रान्ता देहखेदेन '**तंत**' त्ति तान्ता मनःखेदेन—'**परितंत**' त्ति उभयखेदेनेति 'रज्जे य रट्ठे य' इत्यत्र

यावत्करणादिदं दृश्यं—' **कोसे य कोट्ठागारे य वाहणे य** 'त्ति, ' **मुच्छिए गढिए गिद्धे अज्झोववण्णे**'त्ति एकार्थाः, '**आसाएमाणे**' त्यादय एकार्थाः, **'अट्टदुहट्टवसट्टे'**त्ति आर्तो मनसा दुःखितो—दुःखार्त्तो देहेन वशार्त्तस्तु—इन्द्रियवशेन पीडितः, ततः कर्मधारयः, ' **उज्जला** ' इह यावत्करणादिदं दृश्यं—' **विउला कक्कसा पगाढा चंडा दुहा तिव्वा दुरहियास** 'त्ति एकार्था एव, ' **अणिट्ठा अकंता अप्पिया अमणुन्ना अमणामा** ' एतेऽपि तथैव ॥

' **पुव्वरत्तावरत्तकालसमयंसि** 'त्ति पूर्वरात्रो—रात्रेः पूर्वभाग अपररात्रो—रात्रेः पश्चिमो भागस्तल्लक्षणो यः कालसमयः—कालरूपः समयः स तथा तत्र ' **कुडुंबजागरियाए** 'त्ति कुटुम्बचिन्तयेत्यर्थः, ' **अज्झत्थिए** 'त्ति आध्यात्मिकः आत्मविषयः, इह चान्यान्यपि पदानि दृश्यानि, तद्यथा—' **चिंतिए** 'त्ति स्मृतिरूपः ' **कप्पिए** 'त्ति बुद्ध्या व्यवस्थापितः ' **पत्थिए** 'त्ति प्रार्थितः प्रार्थनारूपः ' **मणोगए** 'त्ति मनस्येव वृत्तो बहिरप्रकाशितः संकल्पः—पर्यालोचः, ' **इट्ठे** 'त्यादीनि पञ्चैकार्थिकानि प्राग्वत्, ' **धिज्जे** 'त्ति ध्येया ' **वेसासिय** 'त्ति विश्वसनीया ' **अणुमय** 'त्ति विप्रियदर्शनस्य पश्चादपि मता अनुमतेति, ' **नामं** 'ति पारिभाषिकी सञ्ज्ञा ' **गोयं** 'त्ति गोत्रं—आन्वर्थिकी सञ्ज्ञैवेति ॥

' **किमंग पुण** 'त्ति किं पुनः '**अंग**' इत्यामन्त्रणे ' **गब्भसाडणाहि य**' ति शातनाः—गर्भस्य खण्डशो भवनेन पतनहेतवः **'पाडणाहि य'** त्ति पातनाः यैरुपायैरखण्ड एव गर्भः पतति ' **गालणाहि य** 'त्ति यैर्गर्भो द्रवीभूय क्षरति ' **मारणाहि य** 'त्ति मरणहेतवः ॥

[ पृ. १३ ] '**अकामिय**'त्ति निरभिलाषाः '**असयंवस**'त्ति अस्वयंवशा' **अट्ठनालिओ**'त्ति अष्टौ नाडयः—शिराः '**अभिंतरप्पवहाउ**' त्ति शरीरस्याभ्यन्तर एव रुधिरादि स्रवन्ति यास्तास्तथोच्यन्ते, '**बाहिरप्पवहाउ**'त्ति शरीराद्बहिः पूयादि क्षरन्ति यास्तास्तथोक्ताः, एता एव षोडश विभज्यन्ते '**अट्ठे**'त्यादि, कथमित्याह—'**दुवे दुवे**'त्ति द्वे पूयप्रवाहे द्वे च शोणितप्रवाहे, ते च क्वेत्याह—'**कन्नंतरेसु**' श्रोत्ररन्ध्रयोः, एवमेताश्चतस्रः, एवमन्या अपि व्याख्येयाः, नवरं धमन्यः—कोष्ठकहड्डान्तराणि '**अग्गियए**'ति अग्निको भस्मकाभिधानो वायुविकारः ।

[ पृ. १४ ] '**जाइअंधे**' इत्यत्र यावत्करणात् '**जाइमूए**' इत्यादि दृश्यं, '**हुंडं**'ति अव्यवस्थिताङ्गावयवं '**अंधारूवं**'ति अन्धाकृतिः, '**भीया**' इत्यत्रैतद्दृश्यं 'तत्था उव्विग्गा संजायभया' भयप्रकर्षाभिधानायैकार्थाः शब्दाः, '**करयले**'त्यत्र 'करयलपरिग्गहियं दसणहं मत्थए अंजलिं कट्टु' इति दृश्यं, 'नवण्ह' मित्यत्र 'मासाणं बहुपडिपुन्नाण' मित्यादि दृश्यं, तथा '**जाइअंध**' मित्यादि च, '**संभंते**'ति उत्सुकः **उट्ठाए उट्ठेइ**'त्ति उत्थानेनोत्तिष्ठति, '**पय**'त्ति प्रजाः—अपत्यानि, '**रहस्सिगयंसि**' त्ति राहस्यिके विजने इत्यर्थः ॥

'**पुरा पोराणाणं**'ति पुरा—पूर्वकाले कृतानामिति गम्यम् अत एव '**पुराणानां**' चिरन्तनानाम्, इह च यावत्करणात् 'दुच्चिन्नाणं दुप्पडिकंताणं' इत्यादि 'पावगं फलवित्तिविसेस'मित्यन्तं द्रष्टव्यम् ।

'**अहम्मिए**' इत्यत्र यावत्करणादिदं दृश्यं–'बहुनगरनिग्गयजसे सूरे दढप्पहारी'ति, व्यक्तं च ।

'**कालमासे**'त्ति मरणावसरे ।

'**सागरोवम जाव**'त्ति 'सागरोपमट्ठिईएसु नेरइयत्ताए' द्रष्टव्यम् ।

[ पृ. १५ ] '**जाइकुलकोडीजोणिप्पमुहसयसहस्साइं**'ति जातौ–पञ्चेन्द्रियजातौ कुलकोटीनां योनिप्रमुखानि–योनिद्वारकाणि योनिशतसहस्राणि तानि तथा ।

'**जोणीविहाणंसि**'ति योनिभेदे ।

'**खलिणमट्टिय**'त्ति खलीनां–आकाशस्थां छिन्नतटोपरिवर्तिनीं मृत्तिकामिति ॥

'**उम्मुक्क जाव**'त्ति 'उम्मुक्कबालभावे विन्नयपरिणयमेत्ते जोव्वणगमणुपत्ते'त्ति दृश्यं, तत्र विज्ञ एव विज्ञकः स चासौ परिणतमात्रश्च–बुद्ध्यादिपरिणामापन्न एव विज्ञकपरिणतमात्रः ॥

[ पृ. १६ ] '**अणंतरं चयं चइत्त**'त्ति अनन्तरं शरीरं त्यक्त्वा च्यवनं वा कृत्वा ।

'**जहादढपइन्ने**'त्ति **औपपातिके** यथा **दृढप्रतिज्ञाभिधानो** भव्यो वर्णितस्तथाऽयमपि वाच्यः, कस्मादेवमित्याह–'**सा चेव**'त्ति सैव दृढप्रतिज्ञसम्बन्धिनी अस्यापि वक्तव्यतेति, तामेव स्मरयन्नाह–

'**कलाओ**'त्ति कलास्तेन गृहीष्यन्ते दृढप्रतिज्ञेनेव यावत्करणाच्च प्रव्रज्याग्रहणादिः तस्यैवास्य वाच्यं, यावत्सेत्स्यतीत्यादि पदपञ्चकमिति, ततः सेत्स्यति—कृतकृत्यो भविष्यति भोत्स्यते—केवलज्ञानेन सकलं ज्ञेयं ज्ञास्यति मोक्ष्यति—सकलकर्म्मविमुक्तो भविष्यति परिनिर्वास्यति—सकलकर्मकृतसन्तापरहितो भविष्यति, किमुक्तं भवति ! सर्वदुःखानामन्तं करिष्यतीति ॥

॥ प्रथमाध्ययनविवरणम् ॥

---

२.

## ॥ उज्झियए ॥

[ पृ. १६ ] '**अहीणे**'त्ति अहीणपुण्णपंचिंदियसरीरेत्यर्थः, यावत्करणात् '**लक्खणवंजणगुणोववेया** माणुम्माणप्पमाणपडिपुन्नसुजायसव्वंगसुंदरंगी' त्यादि द्रष्टव्यं, तत्र लक्षणानि—स्वस्तिकादीनि—व्यञ्जनानि—मषीतिलकादीनि गुणाः—सौभाग्यादयः मानं—जलद्रोणमानता उन्मानं—अर्द्धभारप्रमाणता प्रमाणं—अष्टोत्तरशताङ्गुलोच्छ्रयतेति, '**बावत्तरीकलापंडियं**'त्ति लेखाद्याः स्त्रीणां तु विज्ञेया एव प्राय इति, '***चउसट्ठिगणियागुणोववेया***' गीतनृत्यादीनि विशेषतः पण्यस्त्रीजनोचितानि यानि चतुष्षष्ठिर्विज्ञानानि ते गणिकागुणाः अथवा **वात्स्यायनोक्तान्या**लिङ्गनादीन्यष्टौ वस्तूनि तानि च प्रत्येकमष्टभेदत्वाच्चतुःषष्टिर्भवन्तीति, चतुःषष्ट्या गणिकागुणैरुपेता या सा तथा, एकोनत्रिंशद्विशेषा एकविंशती रतिगुणा द्वात्रिंशच्च पुरुषोपचाराः कामशास्त्रप्रसिद्धाः ।

'**नवंगसुत्तपडिबोहिय**' त्ति द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे एका जिह्वा एका त्वक् एकं च मनः इत्येतानि नवाङ्गानि सुप्तानीव सुप्तानि यौवनेन प्रतिबोधितानि–स्वार्थग्रहणपटुतां प्रापितानि यस्याः सा तथा 'अट्ठारसदेसीभासाविसारय' त्ति रूढिगम्यं '**सिंगारागार चारुवेस**' त्ति शृङ्गारस्य–रसविशेषस्यागारमिव चारुवेषो यस्याः सा तथा, '**गीयरइगधव्वनट्टकुसल**' त्ति गीतरतिश्चासौ गन्धर्व्वनाट्यकुशला चेति समासः, गन्धर्वं नृत्यं गीतयुक्तं नाट्यं तु नृत्यमेवेति, '**संगयगय**' त्ति 'संगयगयभणियविहियविलाससललियसंलावनिउणजुत्तोवयारकुसले' ति दृश्यं सङ्गतानि–उचितानि गतादीनि यस्याः सा तथा, सललिताः–प्रसन्नतोपेता ये संलापास्तेषु निपुणा या सा तथा,

[ **पृ. १७.** ] युक्ताः–सङ्गता ये उपचारा–व्यवहारास्तेषु कुशला या सा तथा, ततः पदत्रयस्य कर्म्मधारयः, '**सुंदरथण**' त्ति एतेनेदं दृश्यं–' सुंदरथणजहणवयणकरचरणनयणलावण्णविलासकलिय ' त्ति व्यक्तं नवरं जघनं–पूर्वकटीभागः लावण्यं–आकारस्य स्पृहणीयता विलासः –स्त्रीणां चेष्टाविशेषः '**ऊसियज्झय**' त्ति ऊर्ध्वीकृतजयपताका सहस्रलाभेति व्यक्तं '**विदिन्नछत्तचामरबालवीयणीय**' त्ति वितीर्णं–राज्ञा प्रसादतो दत्तं छत्रं चामररूपा वालव्यजनिका यस्याः सा तथा, '**कन्नीरहप्पयाया यावि होत्थ**' त्ति कर्णीरथः–प्रवहणं तेन प्रयातं–गमनं यस्याः सा तथा 'वाऽपी' ति समुच्चये 'होत्थ' त्ति अभवदिति, '**आहेवच्चं**' ति आधिपत्यम्–अधिपतिकर्म, इह यावत्करणादिदं दृश्यं–' पोरवच्चं ' पुरोवर्त्तित्वं–अग्रेसरत्वमित्यर्थः 'भर्तृत्वं'

पोषकत्वं 'स्वामित्वं' स्वस्वामिसम्बन्धमात्रं 'महत्तरगत्तं' महत्तरत्वं शेषवेश्याजनापेक्षया महत्तमताम् '**आणाईसरसेणावच्चं**' आज्ञेश्वरः–आज्ञाप्रधानो यः सेनापतिः–सैन्यनायकस्तस्य भावः कर्म्म वा आज्ञेश्वर-सेनापत्यम् आज्ञेश्वरसेनापत्यमिव आज्ञेश्वरसेनापत्यं '**कारेमाणा**' कारयन्ती परैः '**पालेमाणा**' पालयन्ती स्वयमिति ॥

'**अहीण**' त्ति 'अहीणपुन्नपंचिंदियसरीरे' त्ति व्यक्तं च, याव-त्करणादिदं दृश्यं 'लक्खणवंजणगुणोववेए' इत्यादि ।

'**इंदभूई**' इत्यत्र यावत्करणात् 'नामे अणगारे गोयमगोत्तेण'–मित्यादि 'संखित्तविउलतेयलेसे' इत्येतदन्तं दृश्यं ॥

'**छट्ठंछट्ठेणं जहा पन्नत्तीए**' त्ति यथा भगवत्यां तथेदं वाच्यं, 'तच्चैवं–छट्ठंछट्ठेणं अणिक्खित्तेणं तवोकम्मेणं अप्पाणं भावेमाणे विहरइ, तए णं से भगवं गोयमे छट्ठक्खमणपारणगंसि' '**पढम**' इत्यत्र यावत्क-रणादिदं दृश्यं–पढमाए पोरिसीए सज्झायं करेइ बीयाए पोरिसीए झाणं झियाइ तइयाए पोरिसीए अतुरियमचवलमसंभंते मुहपोत्तियं पडिलेहेइ भायणवत्थाइं पडिलेहेइ भायणाणि पमज्जति भाय-णाणि उग्गाहेइ जेणेव समणे भगवं महावीरे तेणामेव उवागच्छइ २-समणं भगवं महावीरं वंदइ नमंसइ २ एवं वयासी–इच्छामि णं भंते । तुज्झेहिं अब्भणुण्णाए समाणे छट्ठक्खमणपारणगंसि वाणियगामे णगरे उच्चनीयमज्झिमकुलाइं घरसमुदाणस्स भिक्खायरियाए अडित्तए' गृहेषु भिक्षार्थं भिक्षाचर्यया–भैक्षसमाचारेणाटितुमिति वाक्यार्थः, 'अहा-

सुहं देवाणुप्पिया ! मा पडिबंधं ' स्खलनां मा कुर्वित्यर्थः, ' तए णं भगवं गोयमे समणेणं ३ अब्भणुन्नाए समाणे समणस्स ३ अंतियाओ पडिनिक्खमइ अतुरियमचवलमसंभंते जुगंतरप्पलोयणाए दिट्ठिए पुरओ रियं सोहेमाणे ' त्ति ॥

**' संनद्धबद्धवम्मियगुडिए '** त्ति संनद्धाः—सन्नहत्या कृतसन्नाहाः तथा बद्धं वर्म्म—त्वक्त्राणविशेषो येषां ते बद्धवर्मागस्त एव बद्धकर्म्मिकाः, तथा गुडा—महांस्तनुत्राणविशेषः सा संजाता येषां ते गुडितास्ततः कर्म्मधारयः, **' उप्पीलियकच्छे '** त्ति उत्पीडिता—गाढतरबद्धा कक्षा उरोबन्धनं येषां ते तथा तान् **' उद्दामियघंटे '** त्ति उद्दामिता—अपनीतबन्धना प्रलम्बिता इत्यर्थः घण्टा येषां ते तथा तान् ' नाणामणिरयणविविहगेविज्जे ' त्ति नानामणिरत्नानि विविधानि ग्रैवेयकानि—ग्रीवाभरणानि उत्तरकञ्चुकाश्च—तनुत्राणविशेषाः सन्ति येषां ते तथा, अत एव **' पडिकप्पिए '** त्ति कृतसन्नाहादिसामग्रीकान् **' झयपडागवरपंचामेलआरूढहत्थारोहे '** ध्वजाः—गरुडादिध्वजाः पताकाः—गरुडादिवर्जितास्ताभिर्वरा ये ते तथा पञ्च आमेलकाः—शेखरका येषां ते तथा आरूढा हस्त्यारोहा—महामात्रा येषु ते तथा, ततः पदत्रयस्य कर्म्मधारयोऽतस्तान्, **' गहियाउहप्पहरणा '** गृहीतानि आयुधानि प्रहरणाय येषु अथवा आयुधान्यक्षेप्याणि प्रहरणानि तु क्षेप्याणीति ॥

**' सन्नद्धबद्धवम्मियगुडिए '** त्ति एतदेव व्याख्याति—**' आविद्धगुडे ओसारियपक्खरे '** त्ति आविद्धा—परिहिता गुडा येषां ते तथा,

गुडा च यद्यपि हस्तिनां तनुत्राणं रूढा तथाऽपि देशविशेषापेक्षयाऽश्वानामपि संभवतीति, अवसारिता—अवलम्बिताः पक्खराः—तनुत्राणविशेषा येषां ते तथा तान्, '**उत्तरकंचुइयओचूलमुहचंडाधरचामरथासगपरिमंडियकडिय**' त्ति उत्तरकञ्चुकः—तनुत्राण विशेष एव येषामस्ति ते तथा, तथाऽवचूलकैर्मुखं चण्डाधरं—रौद्रावरोष्ठं येषां ते तथा, तथा चामरैः थासकैश्च—दर्प्पणैः परिमण्डिता कटी येषां ते तथा, ततः कर्मधारयोऽतस्तान्, '**उप्पीलियसरासणपट्टीए**'त्ति उत्पीडिता—कृतप्रत्यश्चारोपणा शरासनपट्टिका—धनुर्यष्टिर्बाहुपट्टिका वा यैस्ते तथा तान्, '**पिणिद्धगेविज्ज**' त्ति पिनद्धं—परिहितं ग्रैवेयकं यैस्ते तथा तान्, **विमलवरबद्धचिंधपट्टे**' विमलो वरो बद्धश्चिह्नपट्टो—नेत्रादिमयो यैस्ते तथा तान् ।

[ पृ. १८. ] '**अवउडगबंधणं**' ति अवकोटकेन—कृकाटिकाया अधोनयनेन बन्धनं यस्य स तथा तम्, '**उक्खित्तकन्ननासं**' ति उत्पाटितकर्णनासिकं '**नेहतुप्पियगत्तं**' ति स्नेहस्नेहितशरीरं '**वज्झकक्खडियजुयणियच्छं**' ति वध्यश्चासौ करयोः—हस्तयोः कट्यां—कटीदेशे युगं—युग्मं निवसित इव निवसितश्चेति समासोऽतस्तम्, अथवा वध्यस्य यत्करकटिकायुगं—निन्द्यचीवरिकाद्वयं तन्निवसितो यः स तथा तं ॥

'**कंठेगुणरत्तमल्लदामं**' कण्ठे—गले गुण इव—कण्ठसूत्रमिव रक्तं—लोहितं मल्लदाम—पुष्पमाला यस्य स तथा तं '**चुण्णगुंडियगायं**'

गैरिकक्षोदागुण्डितशरीरं ' **चुलयं** ' ति संत्रस्तं ' **वज्झपाणपीयं** ' ति वध्या बाह्या वा प्राणाः—उच्छ्वासादयः प्रतीताः प्रिया यस्य स तथा तं ' **तिलंतिलं चेव छिज्जमाणं** ' ति तिलशश्छिद्यमानमित्यर्थः ' **कागणिमंसाइं खावियंतं** ' काकणीमांसानि तद्देहोत्कृत्तह्रस्वमांसखण्डानि खाद्यमानं ' **पावं** ' ति पापिष्ठं ' **खक्खरसएहि हम्ममाणं** 'ति खर्खरा—अश्वोत्त्रासनाय चर्म्ममया वस्तुविशेषाः स्फुटितवंशा वा तैर्हन्यमानं—ताड्यमानं '**अप्पणो से सयाइं**' ति आत्मनः—आत्मीयानि '**से**' तस्य स्वकानि ।

' **अज्झत्थिए** ' आत्मगतः, इहेदमन्यदपि दृश्यं 'कप्पिए' कल्पितो—भेदवान् कल्पिको वा—उचितः ' **चिंतिए** ' स्मृतिरूपः 'पत्थिए'—प्रार्थितो भगवदुत्तरप्रार्थनाविषयः ' **मणोगए** ' त्ति अप्रकाशित इत्यर्थः संकल्पो—विकल्पः ' **समुप्पज्जित्था** ' समुत्पन्नवान् ' अहो णं इमे पुरिसे पुरापोराणाणं दुच्चिन्नाणं दुप्पडिक्कंताणं असुभाणं पावाणं कम्माणं पावगं फलवित्तिविसेसं पच्चणुब्भवमाणे विहरइ, न मे दिट्ठा णरगा वा नेरइया वा पच्चक्खं खलु अयं पुरिसे निरयपडिरूवियं वेयणं वेएइ त्ति कट्टु ' इत्येतत्प्रथमाध्ययनोक्तं वाक्यमाश्रित्याधिकृताक्षराणि गमनीयानीति ॥

' **रिद्धि** ' त्ति ' रिद्धत्थिमियसमिद्धे ' इत्यादि दृश्यं, तत्र ऋद्धं—भवनादिभिर्वृद्धिमुपगतं स्तिमितं—भयवर्जितं समृद्धं—धनादियुक्तमिति ॥

' **महयाहि०** ' इह ' महयाहिमवंतमलयमंदरमहिंदसारे ' इत्यादि दृश्यं, तत्र महाहिमवदादयः पर्वतास्तद्वत्सारः प्रधानो यः स तथा

‘ **पासाईए** ’ इत्यत्र ‘ पासाईए दरिसणिज्जे अभिरूवे पडिरूवे ’ त्ति दृश्यं, तत्र प्रासादीयो—मनःप्रसन्नताहेतुः दर्शनीयो—यं पश्यच्चक्षुर्न श्राम्यति अभिरूपः—अभिमतरूपः प्रतिरूपः—द्रष्टारं प्रति रूपं यस्येति ॥

[ **पृ. १९** ] ‘ **नगरबलीवद्दे** ’ इत्यादौ बलीवर्दा—वर्द्धितगवाः पड्डिका—ह्रस्वमहिष्यो ह्रस्वगोस्त्रियो वा वृषभाः—साण्डगवः ‘ **कूडगाहे** ’ त्ति कूटेन जीवान् गृह्णातीति कूटग्राहः ॥

‘ **अहम्मिए** ’ त्ति धर्मेण चरति व्यवहरति वा धार्मिकस्तन्निषेधादधार्म्मिकः, यावत्करणादिदं दृश्यम्—‘ **अहम्माणुए** ’ अधर्म्मान्—पापलोकान् अनुगच्छतीत्यधर्म्मानुगाः ‘ **अहम्मिट्ठे** ’ अतिशयेनाधर्मो—धर्मरहितोऽधर्म्मिष्ठः ‘ **अहम्मक्खाई** ’ अधर्म्मभाषणशीलः अधार्मिक प्रसिद्धिको वा ‘ **अधम्मपलोई** ’ अधर्म्मानेव—परसम्बन्धिदोषानेव प्रलोकयति—प्रेक्षते इत्येवंशीलोऽधर्म्मप्रलोकी ‘ **अहम्मपलज्जणे** ’ अधर्म एव—हिंसादौ प्ररज्यते—अनुरागवान् भवतीत्यधर्म्मपरो जनः ‘ **अहम्मसमुदाचारो** ’ अधर्म्मरूपः समुदाचारः—समाचारो यस्य स तथा ‘ **अहम्मेणं चेव वित्तिं कप्पेमाणे** ’ त्ति अधर्मेण—पापकर्म्मणा वृत्तिं—जीविकां कल्पयमानः—कुर्वाणः तच्छील इत्यर्थः ‘ **दुस्सीले** ’ दुष्टशीलः ‘ **दुव्वए** ’ अविद्यमाननियम इति ‘ **दुप्पडियाणंदे** ’ दुष्प्रत्यानन्दः—बहुभिरपि सन्तोषकारणैरनुत्पद्यमानसन्तोष इत्यर्थः ।

‘ **अहीण** ’ त्ति ‘ अहीणपुण्णपंचेंदियसरीरे’ त्यादि दृश्यम् ॥

'**आवन्नसत्त**' त्ति गर्भे समापन्नजीवेत्यर्थः ।

'**धन्नाओ णं ताओ अम्मयाओ**' त्ति अम्बा—जनन्यः, इह यावत्करणादिदं दृश्यं—'पुन्नाओ णं ताओ, तासिं अम्मयाणं सुलद्धे जम्मजीवियफले' त्ति व्यक्तं च ॥

'**ऊहेहि य**' त्ति गवादीनां स्तनोपरिभागैः '**थणेहि य**' त्ति व्यक्तं '**वसणेहि य**' त्ति वृषणैः—आण्डैः '**छेप्पाहि य**' त्ति पुच्छैः ककुदैः—स्कन्धशिखरैः '**वहेहि य**' त्ति वहैः—स्कन्धैः कर्णादीनि व्यक्तानि '**कंबलेहि य**' त्ति सास्नाभिः '**सोल्लिएहि य**' त्ति पक्वैः '**तलिएहि य**' त्ति स्नेहेन पक्वैः '**भज्जिएहि य**' त्ति भ्रष्टैः '**परिसुक्केहि य**' त्ति स्वतः शोषमुपगतैः '**लावणेहि य**' त्ति लवणसंस्कृतैः सुरा—तन्दुल धवादिवल्लीनिष्पन्ना मधु च—माक्षिकनिष्पन्नं मेरकं—तालफलनिष्पन्नं जातिश्च—जातिकुसुमवर्णं मद्यमेव सीधु च गुडधातकीसंभवं प्रसन्ना—द्राक्षादिद्रव्यजन्या मनःप्रसत्तिहेतुरिति । '**आसाएमाणीओ**' त्ति विशेषेण खादयन्त्योऽल्पमेव त्यजन्त्य खर्जूरादेरिव '**परिभाएमाणीओ**' त्ति ददत्यः '**परिभुंजमाणीओ**' त्ति सर्वमुपभुञ्जानाः अल्पमप्यपरित्यज्यन्त्यः शुष्का—शुष्केव शुष्का रुधिरक्षयात् '**भुक्ख**' त्ति भोजनाकरणाद्धीनबलतया बुभुक्षायुक्तेन बुभुक्षा अत एव निर्मांसा '**ओलुग्ग**' त्ति अवरुग्णा—भग्नमनोवृत्तिः '**ओलुग्गसरीरा**' भग्नदेहा '**णित्तेय**' त्ति गतकान्तिः '**दीणविमणवयण**' त्ति दीना—दैन्यवती विमनाः—शून्यचित्ता हीणा च—भीतेति कर्म्मधारयः, '**दीणविमणवयण**'

त्ति पाटान्तरं, तत्र विमनस इव विगतचेतस इव वदनं यस्याः सा तथा, दीना चासौ विमनवदना चेति समासः, '**पंडुल्लइयमुहा**' पाण्डुकृतमुखी पाण्डुरीभूतवदनेत्यर्थः '**ओमंथियणयणवयणकमले**' त्ति 'ओमंथिय' त्ति अधोमुखीकृतानि नयनवदनरूपाणि कमलानि यया सा तथा, '**ओहय**' त्ति 'ओहयमणसंकप्पा' विगतयुक्तायुक्तविवेचनेत्यर्थः, इह यावत्करणादिदं दृश्यं—'**करतलपल्लत्थमुहा**' करतले पर्यस्तं—निवेशितं मुखं यया सा तथा 'अट्टज्झाणोवगया भूमीगयदिट्ठीया झियाइ' त्ति ध्यायति—चिन्तयति ॥

'**इमं च णं**' ति इतश्चेत्यर्थः '**भोमे कूडग्गाहे जेणेव उप्पला कूडग्गाही तेणेव उवागच्छइ उवागच्छित्ता उप्पलं कूडग्गाहिणिं ओहयमणसंकप्प**' इत्यादि सूत्रं प्रागुक्तसूत्रानुसारेण परिपूर्णं कृत्वाऽध्येयं, सूचीमात्रत्वात्पुस्तकस्य ॥

[ पृ. २०. ] 'ताहिं इट्ठाहिं' इत्यत्र पञ्चकलक्षणादङ्कादिदं दृश्यं—'**कंताहिं** पियाहिं मणुन्नाहिं मणामाहिं' एकार्थाश्चैते, 'वग्गूहिं' ति वाग्भिः 'एगे' त्ति सहायाभावात् '**अबीए**' त्ति धर्म्मरूपसहायाभावात् ॥

'**सन्नद्धबद्धवम्मियकवए**' पूर्ववत् यावत्करणात् '**उप्पीलियसरासंणपट्टीए**' इत्यादि '**गहियाउहप्पहरणे**' इत्येतदन्तं दृश्यम् ॥

'**संपुन्नदोहल**' त्ति समस्तवाञ्छितार्थपूरणात् '**सम्माणियदोहल**' त्ति वाञ्छितार्थसमानयनात् '**विणीयदोहल**' त्ति वाञ्छाविनय-

नात् ‘ **विच्छिन्नदोहल** त्ति विवक्षितार्थवाञ्छाऽनुबन्धविच्छेदात् ‘ **संपन्न-दोहल** ’ त्ति विवक्षितार्थभोगसंपाद्यानन्दप्राप्तेरिति ।

‘ **भीया** ’ इत्यत्र ‘ **तत्था तसिया संजायभया** ’ इति दृश्यं, भयोत्कर्षप्रतिपादनपराण्येकार्थकानि चैतानि ।

**[ पृ. २१ ]** ‘ **सव्वओ** ’ त्ति सर्वदिक्षु ‘ **समंत** ’ त्ति विदिक्षु चेत्यर्थः, ‘ **विपलाइत्थ** ’ विपलायितवन्तीति ।

‘ **अयमेयारूवं** ’ त्ति इदमेवंप्रकारं वक्ष्यमाणस्वरूपमित्यर्थः । ‘ **महया २ चिच्ची** ’ त्ति महता २ चिच्चीत्येवं चित्कारेणेत्यर्थः ।

‘ **आरसिय** ’ त्ति आरसितं–आरटितम् ॥

‘ **सोच्च** ’ त्ति अवधार्य ॥

‘ **एयकम्मे** ’ इत्यत्रेदं दृश्यम्–‘ एयप्पहाणे एयविज्जे एयसमायरे ’ त्ति ।

‘ **अट्टदुहट्टोवगए** ’ त्ति आर्त्तं–आर्त्तध्यानं दुर्घटं–दुःखस्थगनीयं दुर्वार्यमित्यर्थः उपगतः–प्राप्तो यः स तथा ।

[ **पृ. २२** ] ‘ **जायणिंदुया यावि** ’ त्ति जातानि–उत्पन्नान्यपत्यानि निर्द्रुतानि–निर्यातानि मृतानीत्यर्थो यस्याः सा जातनिर्द्रुता वाऽपीति समर्थनार्थः, एतदेवाह–जाता जाता दारका विनिघातमापद्यन्ते तस्या इति गम्यम् ॥

‘ **सारक्खमाणी** ’ त्ति अपायेभ्यः ‘ **संगोवेमाणि** ’ ति वस्त्राच्छादनगर्भगृहप्रवेशनादिभिः ।

'**ठिइवडियं व**' त्ति स्थितिपतितां कुलक्रमागतां वर्द्धमानकादिकां पुत्रजन्मक्रियां '**चंदसूरपासणियं व**' त्ति अन्वर्थानुसारिणं तृतीयदिवसोत्सवं '**जागरियं**' ति षष्ठीरात्रिजागरणप्रधानमुत्सवम् ।

'**गोण्णं गुणनिप्फन्न**' त्ति गौणं—अप्रधानमपि स्यादत उक्तं—गुणनिष्पन्नमिति ॥

'**जहा दढपइन्ने**' त्ति औपपातिके यथा **दृढप्रतिज्ञो** वर्णितस्तथाऽयमपीह वाच्यः, किमवधिकं तत्र तत्सूत्रमित्याह—यावत् '**निव्वाघातगिरिकंदरमल्लीणे व्व चंपगपायवे सुहं विहरइ**' त्ति ॥

'**कालधम्मुण**' त्ति मरणेन ।

[ **पृ. २३.** ] '**लवणसमुद्दपोयविवत्तियं**' लवणसमुद्रे पोतविपत्तिर्यस्य स तथा तं, '**निवुड्डभंडसारं**' निमग्नसारभाण्डमित्यर्थः, '**कालधम्मुणा संजुत्तं**' ति मृतमित्यर्थः, शृण्वन्ति ते तथेति ये यथेत्यतदपेक्ष्यं ॥

'**हत्थनिक्खेवं**'ति हस्ते निक्षेपो—न्यासः समर्पणं यस्य द्रव्यस्य तद्धस्तनिक्षेपं, '**बाहिरभंडसारं च**' हस्तनिक्षेपव्यतिरिक्तं च भाण्डसारं—सारभाण्डं गृहीत्वा एकान्तदूरमपक्रामन्ति—**विजयमित्रसार्थवाहभार्या**यास्तत्पुत्रस्य च दर्शनं ददति—तदर्थमपहरन्तीति यावत् ।

'**परसुणियत्ता इव**' त्ति परशुनिकृत्तेव—कुठारच्छिन्नेव 'चम्पकलते' ति '**मित्त**' इत्यत्र यावत्करणादिदं दृश्यं—'णाइणियगसंबंधि' त्ति, तत्र मित्राणि—सुहृदः ज्ञातयः—समानजातयः निजका—पितृव्यादयः

सम्बन्धिनः—असुरपाक्षिकाः, '**रोयमाणी**' त्ति अश्रूणि मुञ्चन्ती '**कंद-माणी**' ति आक्रन्दं महाध्वनिं कुर्वाणा '**विलवमाणी**' ति आर्त्तस्वरं कुर्वन्ती ।

'**अणोहट्टए**' त्ति यो बलाद्धस्तादौ गृहीत्वा प्रवर्त्तमानं निवार-यति सोऽपघट्टकस्तदभावादनपघट्टकः, '**अणिवारिए**' त्ति निषेधकर-हितः, अत एव '**सच्छंदमइ**' त्ति स्वच्छन्दा स्ववशेन वा मतिरस्य स्वच्छन्दमतिः, अत एव '**सइरप्पयारे**' स्वैरं—अनिवारिततया प्रचारो यस्य स तथा '**वेसदारपसंगी** ति वेश्याप्रसङ्गी कलत्रप्रसङ्गी चेत्यर्थः, अथवा वेश्यारूपा ये दारास्तत्प्रसङ्गीति ।

'**भोगभोगाइं**' ति भोजनं भोगः—परिभोगः भुज्यन्त इति भोगाः—शब्दादयो भोगार्हाः भोगा भोगभोगा—मनोज्ञाः शब्दादय इत्यर्थः ।

[ **पृ. २४.** ] '**मुच्छिए**' त्ति मूर्च्छितो—मूढो दोषेष्वपि गुणा-ध्यारोपात् 'गिद्धे' त्ति तदाकाङ्क्षावान् 'गढिए' त्ति प्रथितस्तद्विष-यस्नेहतन्तुसंदर्भितः '**अज्झोववन्ने**' त्ति आधिक्येन तदेकाग्रतां गतोऽध्युपपन्नः । अत एवान्यत्र कुत्रापि वस्त्वन्तरे '**सुइं च**' त्ति स्मृतिं स्मरणं '**रइं च**' त्ति रतिं—आसक्तिं '**धिइं च**' त्ति धृतिं वा चित्त-स्वास्थ्यम् '**अविंदमाणे**' त्ति अलभमानः '**तच्चित्ते**' त्ति तस्या-मेव चित्तं—भावमतः सामान्येन वा मनो यस्य स तथा '**तम्मणे**' त्ति द्रव्यमनः प्रतीत्य विशेषोपयोगं वा '**तल्लेसे**' त्ति कामध्वजागता-शुभात्मपरिणामविशेषः, 'लेश्याहि' कृष्णादिद्रव्यसाचिव्यजनित आत्मप-

रिणाम इति, 'तदज्झवसाणे' त्ति तस्यामेवाध्यवसानं—भोगक्रियाप्रयत्नविशेषरूपं यस्य स तथा, '**तदट्ठोवउत्ते**' त्ति तदर्थं—तत्प्राप्तये उपयुक्तः—उपयोगवान् यः स तथा, '**तयप्पियकरणे**' त्ति तस्यामेवार्पितानि—ढौकितानि करणानि—इन्द्रियाणि येन स तथा, '**तब्भावणाभाविए**' त्ति तद्भावनया—कामध्वजाचिन्तया भावितो—वासितो यः स तथा,

कामध्वजाया गणिकाया बहून्यन्तराणि च—राजगमनस्यान्तराणि '**छिद्दाणि य**' त्ति छिद्राणि राजपरिवारविरलत्वानि '**विवराणि य**' त्ति शेषजनविरहान् '**पडिजागरमाणे**' त्ति गवेषयन्निति ॥

'**इमं च णं**' त्ति इतश्चेत्यर्थः ।

'**ण्हाए**' इत्यत्र यावत्करणादिदं दृश्यं '**कयबलिकम्मे**' देवतानां विहितबलिविधानः '**कयकोउयमंगलपायच्छित्ते**' त्ति कृतानि—विहितानि कौतुकानि च—मषीपुण्ड्रादीनि मङ्गलानि च—सिद्धार्थकदध्यक्षतादीनि प्रायश्चित्तानीव दुःस्वप्नादिप्रतिघातहेतुत्वेनावश्यंकरणीयत्वात् येन स तथा ॥

'**मणुस्सवग्गुरापरिक्खित्ते**' त्ति मनुष्या वागुरेव—मृगबन्धनमिव सर्वतो भवनात् तया परिक्षिप्तो यः स तथा ॥

'**आसुरुत्ते**' त्ति आशु—शीघ्रं रुतः—क्रोधेन विमोहितो यः स आशुरुतः आसुरं वा—असुरसत्कं कोपेन दारुणत्वादुक्तं—भणितं यस्य स आसुरोक्तः रुष्टः—रोषवान् '**कुविए**' त्ति मनसा कोपवान् '**चंडि-**

**क्किए** ' त्ति चाण्डिक्यितो—दारुणीभूतः '**मिसिमिसेमाणे** ' त्ति क्रोधज्वालया ज्वलन् ' **तिवलियभिउडिं णिडाले साहट्टु** ' त्ति त्रिवलीकां भृकुटिं लोचनविकारविशेषं ललाटे संहृत्य—विधायेति ' **अवउडगबंधणं** ' अवकोटनेन च—ग्रीवायाः पश्चाद्भागनयनेन बन्धनं यस्य स तथा तं।

' **पुरापोराणाणं** ' इत्यत्र यावत्करणात् ' **दुच्चिन्नाणं दुप्प-डिकंताणं** ' इत्यादि दृश्यम् ॥

[ पृ. २५ ] ' **वानरपेल्लए** ' त्ति वानरडिम्भान्।

' **तं एयकम्मे** ' त्ति तदिति—तस्मात् एतत्कर्म्मा, इहेदमपरं दृश्यम्—' एयप्पहाणे एयविज्जे एयसमुदाचारे ' त्ति ॥

' **वद्धेहिंति** ' त्ति वर्द्धितकं करिष्यतः ॥

' **उक्किट्ठे** ' त्ति उत्कर्षवान्, किमुक्तं भवति ?—' **उक्किट्ठस-रीरे** ' त्ति ॥

विद्यामन्त्रचूर्णप्रयोगैः, किंविधैः ? इत्याह—' **हिययुड्डावणेहि य** ' त्ति। हृदयोड्डापनैः—शून्यचित्तताकारकैः ' **निण्हवणेहि य** ' त्ति अदृश्यताकारकैः, किमुक्तं भवति ?—अपहृतधनादिरपि परो धनापहारा-दिकं यैरपह्नुते—न प्रकाशयति तदपह्नवता अतस्तैः ' **पण्हवणेहि य** ' त्ति प्रस्नवनैः यैः परः प्रस्नुतिं भजते प्रह्वत्तो भवतीत्यर्थः ' **वसीक-रणेहि य** ' त्ति वश्यताकारकैः, किमुक्तं भवति ?—'**आभिओगिएहिं**' ति अभियोगः—पारवश्यं स प्रयोजनं येषां ते आभियोगिकाः अतस्तैः,

अभियोगश्च द्वेधा, यदाह–" दुविहो खलु अभिओगो दव्वे भावे य होइ नायव्वो । दव्वंमि होंति जोगा विज्जा मंता य भावंमि ॥ १ ॥" ( द्विविधः खल्वभियोगो द्रव्ये भावे च भवति ज्ञातव्यः । द्रव्ये भवन्ति योगाः विद्या मन्त्राश्च भावे ॥ १ ॥ '**अभितोगित्त**' त्ति वशीकृत्य ॥

**[ पृ. ३६. ]** '**निक्खेवो**' त्ति निगमनं वाच्यं, तद्यथा–'एवं खलु जंबू समणेणं भगवया जाव संपत्तेणं दुहविवागाणं बिइअस्स अज्झयणस्स अयमट्ठे पन्नत्ते त्ति बेमि ' अत्र च इतिशब्दः समाप्तौ 'बेमी' त्ति ब्रवीम्यहं भगवत उपश्रुत्य न यथाकथञ्चिदिति ॥

॥ विपाकश्रुते द्वितीयाध्ययनविवरणम् ॥

---

३.

## ॥ अभग्गसेण ॥

[ पृ. २६. ] '**तच्चस्स उक्खेवो**' त्ति तृतीयाध्ययनस्योत्क्षेपः –प्रस्तावना वाच्या, सा चैवं–' जइ णं भंते ! समणेणं भगवया जाव संपत्तेणं दुहविवागाणं दोच्चस्स अज्झयणस्स अयमट्ठे पन्नत्ते तच्चस्स णं भंते ! के अट्ठे पन्नत्ते ।' '**एवं खलु**' त्ति ' एवं ' वक्ष्यमाणप्रकारेणार्थः प्रज्ञप्तः ' खलु ' वाक्यालङ्कारे ' जंबु ' त्ति आमन्त्रणं ।

'**देसप्पंते**' त्ति मण्डलप्रान्ते ।

'**विसमगिरिकंदरकोलंबसन्निविट्ठा**' विषमं यद्गिरेः कन्दरं—कुहरं तस्य यः कोलम्बः—प्रान्तस्तत्र सन्निविष्टः—सन्निवेशिता या सा तथा, कोलंबो हि लोके अवनतं वृक्षशाखाग्रमुच्यते इहोपचारतः कन्दर-प्रान्तः कोलम्बो व्याख्यातः, '**वंसीकलंकपागारपरिक्खित्ता**' वंशीकलङ्का—वंशीजालीमयी वृतिः सैव प्राकारस्तेन परिक्षिप्ता—वेष्टिता या सा तथा, '**छिन्नसेलविसमप्पवायफरिहोवगूढा**' छिन्नो—विभक्तोऽवयवान्तरापेक्षया यः शैलस्तस्य सम्बन्धिनो ये विषमाः प्रपाताः—गर्त्तास्त एव परिखा तयोपगूढा—वेष्टिता या सा तथा।

'**अब्भितरपाणीये**' ति व्यक्तं, '**सुदुल्लभजलपेरंता**' सुष्ठु दुर्लभं जलं पर्यन्तेषु यस्याः सा तथा, '**अणेगखंडी**' अनेका नश्यतां नराणां मार्गभूताः खण्डयः—अपद्वाराणि यस्यां साऽनेकखण्डीति '**विदि-यजणदिण्णनिग्गमप्पवेसा**' विदितानामेव—प्रत्यभिज्ञातानां जनानां दत्तो निर्गमः प्रवेशश्च यस्यां सा तथा, '**सुबहुस्स वि**' सुबहोरपि '**कुवियजणस्स वि**' मोषव्यावर्तकलोकस्य दुष्प्रध्वस्या चाप्यभवत्॥

'**अहम्मिए**' त्ति अधर्म्मेण चरतीत्याधर्म्मिकः, यावत्करणात् '**अधम्मिट्ठे**' अतिशयेन निर्द्धर्म्मः अधर्म्मिष्ठो निस्त्रिंशकर्म्मकारित्वात् '**अधम्मक्खाई**' अधर्म्ममाख्यातुं शीलं यस्य स तथा '**अधम्माणुए**' अधर्म्मकर्तव्यम् अनुज्ञा—अनुमोदनं यस्यासावधर्मानुज्ञः अधर्मानुगो वा '**अधम्मप्पलोयई**' अधर्म्ममेव प्रलोकयितुं शीलं यस्यासावधर्म्मप्रलोकी '**अधम्मपलज्जणे**' अधर्म्मप्रायेषु कर्म्मसु प्रकर्षेण रज्यते इति अध-र्म्मप्ररजनः, रलयोरैक्यमिति कृत्वा रस्य स्थाने लकारः, '**अधम्मसिल-**

**समुदायारे** ' अधर्म्म एव शीलं स्वभावः समुदाचारश्च—यत्किञ्चनानुष्ठानं यस्य स तथा ' **अधम्मेणं चेव वित्तिं कप्पेमाणे विहरइ** ' अधर्म्मेण—पापेन सावद्यानुष्ठानेनैव दहनाङ्कननिर्लाञ्छनादिना कर्म्मणा ' **वृत्तिं** ' वर्त्तनं ' कल्पयन् ' कुर्वाणो ' विहरती ' ति आस्ते स्म, ' **हणछिंदभिंदवियत्तए** ' ' हन ' विनाशय ' छिन्धि ' द्विधा कुरु ' भिन्द ' कुन्तादिना भेदं विधेहीत्येवं परानपि प्रेरयन् प्राणिनो विकृन्ततीति हनछिंदभिन्दविकर्तकः, हनेत्यादयः शब्दाः संस्कृतेऽपि न विरुद्धाः अनुकरणरूपत्वादेषां, ' **लोहियपाणी** ' प्राणिविकर्त्तनेन लोहितौ रक्त-रक्ततया पाणी हस्तौ यस्य स तथा ' **बहूणगरणिग्गयजसे** ' बहुषु नगरेषु निर्गतं—विश्रुतं यशो यस्य स तथा, इतो विशेषणचतुष्कं व्यक्त-म , ' **असिलट्ठिपढममल्ले** ' असियष्टिः—खड्गलता तस्यां प्रथमः—आद्यः प्रधान इत्यर्थः मल्लो—योधः यः स तथा, ' **आहेवच्चं** ' ति अधिपति-कर्म्म यावत्करणात् ' पोरेवच्चं ' सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसे-णावच्चं ' ति दृश्यं, व्याख्या च पूर्ववत् ॥

[ **पृ. २७.** ] ' **गंठिभेयगाण ये** ' ति घुर्घुरादिना ये ग्रन्थीः छिन्दन्ति ते ग्रन्थिभेदकाः ' **संधिच्छेयगाण ये** ' ति ये भित्तिसन्धीन् भिन्दन्ति ते सन्धिच्छेदकाः ' **खंडपट्टाण य** ' त्ति खण्डः—अपरिपूर्णः पट्टः—परिधानपट्टो येषां मद्यद्यूतादिव्यसनाभिभूततया परिपूर्णपरिधानाप्राप्तेः ते खण्डपट्टाः—द्यूतकारादयः, अन्यायव्यवहारिण इत्यन्ये, धूर्ता इत्यपरे, ' **खंडपाडियाण** ' मिति क्वचिदिति, ' छिन्नभिण्णबाहिराहियाणं ' ति छिन्ना हस्तादिषु भिन्ना नासिकादिषु ' **बाहिराहिय** ' त्ति नगरादेर्बा-

ह्यकृता:, अथवा ' बाहिर ' त्ति बाह्याः स्वाचारपरिभ्रंशाद्विशिष्टजनबहिर्वर्तिनः ' **अहिय** ' त्ति अहिता ग्रामादिदाहकत्वाद् अतो द्वन्द्वस्ततस्तेषां ' **कुडंगं** ' वंशादिगहनं तद्वद्यो दुर्गमत्वेन रक्षार्थमाश्रयणीयत्वसामर्थ्यात्स तथा ॥

' **उवीलेमाणे** ' त्ति उपपीडयन् ' **विहम्मेमाणे** ' त्ति विधर्म्मयन्—विगतधर्मं कुर्वन्, अर्थापहारे हि दानादिधर्माभावः स्यादेवेति, ' **तज्जमाणे** त्ति तर्जयन् ज्ञास्यसि रे इत्यादि भणन्तः ' **तालेमाणे** ' त्ति ताडयन् कषादिघातैः ' णिच्छाणे ' त्ति प्राकृतत्वात् निःस्थानं—स्थानवर्जितं ' **निद्धणे** ' निर्द्धनं गोमहिष्यादिरहितं कुर्वन्निति, कल्पः—उचितो य आयः—प्रजातो द्रव्यलाभः स कल्पायोऽतस्तम् ॥

' **अहीण** ' इत्यत्र ' अहीणपुन्नपंचेंदियसरीरा लक्खणवंजणगुणोववेए ' त्यादि द्रष्टव्यम् ।

' **अवउडय** ' इत्यत्र यावत्करणात् ' अवउडगबंधणबद्धं उक्खत्तकन्ननासं नेहुत्तुप्पियगत्तं ' इत्यादि द्रष्टव्यं व्याख्या च प्राग्वदिति ॥

' **पढमंमि चच्चरंसि** ' प्रथमे चर्च्चरे—स्थानविशेषे ' **निसियावंति** ' त्ति निवेशयन्ति, ' **चुल्लपिउए** ' त्ति अष्टौ लघुपितॄन्—पितुर्लघुभ्रातॄन् इत्यर्थः ॥

' **कलुणं** ' त्ति करुणं—करुणास्पदं तं पुरुषं, क्रियाविशेषणं चेदं, ' **काकणिमंसाइं** ' त्ति मांसश्लक्ष्णखण्डानि ॥

' **दोच्चंसि चच्चरंसि** ' त्ति द्वितीये चर्च्चरे ' **चुल्लमाउयाओ** ' त्ति पितृलघुभ्रातृजायाः अथवा मातुर्लघुसपत्नीः ॥

'**एवं तच्चं**' त्ति तृतीये चर्चरे '**अट्ठ महापिउए**' त्ति अष्टौ महापितॄन्–पितुर्ज्येष्ठभ्रातॄन्, एवं यावत्करणात् 'अग्गओ घाएंतीति वाच्यम्'। '**चउत्थे**' त्ति चतुर्थे चर्चरे '**अट्ठ महामाउयाओ**' त्ति पितुर्ज्येष्ठभ्रातृजायाः, अथवा मातुर्ज्येष्ठाः सपत्नीः, पञ्चमे चत्वरे

**[ पृ. २८ ]** पुत्रानग्रतो घातयन्ति, षष्ठे स्नुषाः वधूः सप्तमे जामातृकान् दुहितुर्भर्तॄन् अष्टमे '**धूयाओ**' त्ति दुहितॄः नवमे '**नत्तुए**' त्ति नप्तॄन् पौत्रान् दौहित्रान् वा दशमे '**नत्तुईओ**' त्ति नप्तुः–पौत्रीर्दौहित्रीर्वा एकादशे '**नत्तुयावइ**' त्ति नप्तृकापतीन् द्वादशे '**नत्तुइणीओ**' त्ति नप्तृकिनीः पौत्रदौहित्रभार्याः, त्रयोदशे '**पिउसिय-पइय**' त्ति पितृष्वसापतिकान् तत्र पितुः स्वसारो–भगिन्यस्तासां पतय एव पतिका–भर्त्तारः '**चउद्दसे पिउसियाओ**' त्ति पितृष्वसृः–जनकभगिनीः पञ्चदशे।

'**माउसियापइय**' त्ति मातृष्वसुःपतिकान्–जननीभगिनीभर्तॄन् षोडशे '**माउसियाओ**' त्ति मातृष्वसृः–जननीभगिनीः सप्तदशे '**माउ-सियाओ**' त्ति मातुलभार्याः, अष्टादशे अवशेषं '**मित्तणाइणियगसं-बंधिपरियणं**' त्ति मित्राणि–सुहृदः ज्ञातयः–समानजातीयाः निजकाः–स्वजनाः मातुलपुत्रादयः सम्बन्धिनः–श्वसुरश्यालकादयः परिजनो–दासी-दासादिः, ततो द्वन्द्वोऽतस्तत्।

'**अड्ढे**' इह यावत्करणात् 'दित्ते विच्छड्डियविउलभत्तपाणे' इत्यादि 'बहुजणस्स अपरिभूए' इत्येतदन्तं दृश्यम्॥

‘ **दिन्नभइभत्तवेयण** ’ त्ति दत्तं भृतिभक्तरूपं वेतनं–मूल्यं येषां ते तथा, तत्र भृतिः–द्रम्मादिवर्त्तनं भक्तं तु घृतकगादि ‘ **कल्लाकल्लिं** ’ ति कल्ये च कल्ये च कल्याकल्यि–अनुदिनमित्यर्थः ‘ **कुद्दालीकाः** ’ भूखनित्रविशेषाः ॥

‘ **पत्थिकापिटकानि** ’ च वंशमयभाजनविशेषाः; काकी वूकी टिट्टिभी बकी मयूरी कुर्कुटी च प्रसिद्धा, अण्डकानि च प्रतीतान्येवेति।

[ पृ. २९ ] ‘ **तवएसु य** ’ त्ति नवकानि–सुकुमारिकादितलनभाजनानि ‘ **कवल्लीसु य** ’ त्ति कवल्यो–गुडादिपाकभाजनानि ‘ **कंडुसु** ’ त्ति कन्दवो–मण्डकादिपचनभाजनानि, ‘ **भज्जणएसु य** ’ त्ति भर्जनकानि कर्पराणि धानापाकभाजनानि, अङ्गाराश्च प्रतीताः, ‘ **तलिंति** ’ अग्नौ स्नेहेन, **भज्जन्ति**–धानावत्पचन्ति ‘ **सोल्लिंति य** ’ त्ति ओदनमिव राध्यन्ति खण्डशो वा कुर्वन्ति ‘ **अन्तरावणंसि** ’त्ति राजमार्गमध्यभागवर्त्तिहट्टे ‘ **अंडयपणिएणं** ’ त्ति अण्डकपण्येन ॥

‘ **सुरं चे** ’ त्यादि प्राग्वत्

‘ **जीमियभुत्तुत्तरागयाओ** ’ त्ति जेमिताः–कृतभोजनाः भुक्तोत्तरं भोजनानन्तरमागता उचितस्थाने यास्तास्तथा ।

‘ **पुरिसनेवत्थिज्ज** ’ त्ति कृतपुरुषनेपथ्याः ।

‘ **सन्नद्ध** ’ इत्यत्र यावत्करणादिदं दृश्यं–सन्नद्धबद्धवम्मियकवइया उप्पीलियसरासणपट्टिया पिणद्धगेविज्जा विमलवरचिंधपट्टा गहियाउहपहरणावरण त्ति व्याख्या तु प्रागिवेति, ‘ **भरिएहिं** ’ ति हस्तपाशितैः

**'फलीएहिं'** त्ति स्फटिकैः **'निक्कट्टाहिं'** ति कोशकादाकृष्टैः **'असीहिं'** ति खङ्गैः **'अंसागएहिं'** ति स्कन्धमागतैः पृष्ठदेशे बन्धनात् **'तोणेहिं'** ति शरधीभिः **'सजीवेहिं'** ति सर्जीवैः—कोट्यारोपितप्रत्यञ्चैः **'धणूहिं'** ति कोदण्डकैः **'समुक्खित्तेहिं सरेहिं'** ति निसर्गार्थमुत्क्षिप्तैर्बाणैः **'समुल्लासियाहिं'** त्ति समुल्लासिताभिः । **'दामाहिं'** त्ति पाशकविशेषैः 'दाहाहिं' त्ति क्वचित् तत्र प्रहरणविशेषैः दीर्घवंशाग्रन्यस्तदात्ररूपैः **'ओसारियाहिं'** त्ति प्रलम्बिताभिः **'ऊरुघंटाहिं'** ति जङ्घाघण्टिकाभिः ।

[ पृ. ३० ] **'छिप्पतूरेणं वज्जमाणेणं'** द्रुततूर्येण वाद्यमानेन, 'महया उक्किट्ठि' इत्यत्र यावत्करणादिदं दृश्यं—**'महयाउक्किट्ठीसीहनायबोलकलयलरवेणं'** तत्र उत्कृष्टिश्च—आनन्दमहाध्वनिः सिंहनादश्च प्रसिद्धः बोलश्च—वर्णव्यक्तिवर्जितो ध्वनिः कलकलश्च व्यक्तवचनः स एव तल्लक्षणो यो रवः स तथा तेन **'समुद्दरवभूयं पिव'** त्ति जलधिशब्दप्राप्तमिव तन्मयमिवेत्यर्थः गगनमण्डलमिति गम्यते ।

**'तं जइ अहं पि'** त्ति तत्—तस्माद्यद्यहमपि, इह यावत्करणादिदं दृश्यं—'बहूहिं मित्तणाइणियगसयणसंबंधिपरियणमहिलाहिं अन्नाहि **ये**' त्यादि, **'दोहलं विणिएज्जामी'** त्ति दोहदं व्यपनयामीति कट्टु—इति हेतोः **'तंसि दोहलंसि'** त्ति तस्मिन् दोहदे, इह यावत्करणात् **'अविणिज्जमाणंमि सुका भुक्खा ओलग्गा'** इत्यादि 'अट्टज्झाणोवगया झियाइ' इत्येतदन्तं दृश्यमिति ।

'तए णं से' विजयश्चौरसेनापतिः स्कन्दश्रीयं भार्यामुपहतमनः-संकल्पां भूमिगतदृष्टिकामार्त्तध्यानोपगतां ध्यायन्तीं पश्यति, दृष्ट्वा एवमवादीत्- किं णं त्वं देवानां प्रिये! उपहतमनःसङ्कल्पेत्यादिविशेषणा ध्यायसीति, इदं वाक्यमनुसृत्य सूत्रं गमनीयम्।

'**इड्ढीसक्कारसमुदएणं**' त्ति ऋद्ध्या—वस्त्रसुवर्णादिसम्पदा सत्कारः—पूजाविशेषस्तस्य समुदायो यः स तथा तेन, '**दसरत्तं ठिइपडियं**' त्ति दशरात्रं यावत् स्थितिपतितं—कुलक्रमागतं पुत्रजन्मानुष्ठानं तत्तथा॥

**[ पृ. ३१ ]** '**अट्ठदारियाओ**' त्ति, अस्यायमर्थः—'तए णं तस्स अभग्गसेणस्स कुमारस्स अम्मापियरो अभग्गसेणं कुमारं सोहणंसि तिहिकरणणक्खत्तमुहुत्तंसि अट्ठहिं दारियाहिं सद्धिं एगदिवसेणं पाणिं गिण्हाविंसु' त्ति, यावत्करणादिदं दृश्यं—'तए णं तस्स अभग्गसेणस्स कुमारस्स अम्मापियरो इमं एयारूवं पीईदाणं दलयंति' त्ति '**अट्ठओ दाओ**' त्ति अष्टपरिमाणमस्येति अष्टको दायो—दानं वाच्य इति शेषः, स चैवम्—'अट्ठ हिरण्णकोडीओ अट्ठ सुवण्णकोडीओ' इत्यादि यावत् 'अट्ठ पेसणकारियाओ अन्नं च विपुलधणकणगरयणमणिमोत्तियसंखसिलप्पवालरत्तरयणमाइयं संतसारसावएज्ज' मिति, '**उप्पिं भुंजइ**' त्ति अस्यायमर्थः—'तए णं से अभग्गसेणे कुमारे उप्पिं पासायवरगए फुट्टमाणेहिं मुयंगमत्थएहिं वरतरुणिसंपउत्तेहिं बत्तीसइबद्धेहिं नाडएहिं उवगिज्जमाणे विउले माणुस्सए कामभोगे पच्चणुब्भवमाणे विहरइ' त्ति॥

'महत्थं' महाप्रयोजनं '**महग्घं**' ति बहुमूल्यं 'महरिहं' ति महतो योग्यमिति॥

'**दंडं**' ति दण्डनायकम् ॥

**[ पृ. ३२. ]** '**जीवगाहं गेण्हाहि**' त्ति जीवन्तं गृहाणेत्यर्थः ॥

[ **पृ. ३३.** ] '**भडचडगरेणं**' ति योधवृन्देन ॥

'**मग्गइएहिं**' हस्तपाशितैः, यावत्करणात् '**फलिएही**' त्यादि दृश्यम् ।

'**विसमदुग्गगहणं**' ति विषमं—निम्नोन्नतं दुर्गं—दुष्प्रवेशं गहनं—वृक्षगह्वरम् ।

'**संपलग्गे**' त्ति योद्धुं समारब्धः ॥

'**हयमहिय**' त्ति यावत्करणादेवं दृश्यम्—'हयमहियपवरवीरघाइयविवडियाचिंधधयपडागं' हतः सैन्यस्य हतत्वात् मथितो मानस्य मथनात् प्रवरवीराः—सुभटाः घातिताः—विनाशिता यस्य स तथा, विपतिताः चिह्नयुक्तकेतवः पताकाश्च यस्य स तथा, ततः पदचतुष्टयस्य कर्मधारयः, '**दिसोदिसिं विप्पडिसेहिइ**' त्ति सर्वतो रणात् निवर्त्तयति ॥

'**अथामे**' त्ति तथाविधस्थामवर्जितः '**अबले**' त्ति शारीरबलवर्जितः '**अवीरिय**' त्ति जीववीर्यरहितः '**अपुरिसकारपरक्कमे**' त्ति पुरुषकारः—पौरुषाभिमानः स एव निष्पादितस्वप्रयोजनः पराक्रमः तयोर्निषेधादपुरुषकारपराक्रमः '**अधारणिज्जमिति कट्टु**' त्ति अधारणीयं—धारयितुमशक्यं स्थातुं वाऽशक्यमिति कृत्वा—हेतोः ॥

**[ पृ. ३४. ]** '**उरंउरेणं**' ति साक्षादित्यर्थः ॥

'**सामेण य**' त्ति साम–प्रेमोत्पादकं वचनं '**भेदेण य**' त्ति भेदः स्वामिनः पदातीनां च स्वामिन्यविश्वासोत्पादनम् '**उवप्पयाणेण य**' त्ति उपप्रदानं–अभिमतार्थदानं ।

'**जे वि य से अब्भिंतरगा सीसगभम**' त्ति येऽपि च 'से' तस्याभग्नसेनस्याभ्यन्तरकाः–आसन्ना मन्त्रिप्रभृतयः, किंभूताः?–'**सीसगभम**'त्ति शिष्या एव शिष्यकास्तेषां भ्रमा–भ्रान्तिर्येषु ते शिष्यकभ्रमाः, विनीततया शिष्यतुल्या इत्यर्थः, अथवा शीर्षकं–शिर एव शिरःकवचं वा तस्य भ्रमः–अव्यभिचारितया शरीररक्षत्वेन वा ते शीर्षभ्रमाः, इह तानिति शेषः, भिनत्तीति योगः ।

तथा '**मित्तनाइणियगे**' त्यादि पूर्ववत् '**भिंदइ**' त्ति चोरसेनापतौ स्नेहं भिनत्ति, आत्मनि प्रतिबद्धान् करोतीत्यर्थः ॥

'महत्थयाइं' ति महाप्रयोजनानि '**महग्घाइं**' ति महामूल्यानि '**महरिहाइं**' ति महतां योग्यानि महं वा–पूजामर्हन्ति महान् वाऽर्हः पूज्यो येषां तानि तथा, एवंविधानि च कानिचित्केषाञ्चियोग्यानि भवन्तीत्यत आह–( '**रायारिहाइं**' ति राज्ञामुचितानि ) ।

'**महं महइमहालियं कूडागारसालं**' ति महती–प्रशस्ता महती चासौ अतिमहालिका च–गुर्वी महतिमहालिका ताम्, अत्यन्तगुरुकामित्यर्थः '**कूडागारसालं**' ति कूटस्येव–पर्वतशिखरस्येवाकारो यस्याः सा तथा सा चासौ शाला चेति समासोऽतस्ताम्, '**अणेगखंभ-**

सयसन्निविट्ठं पासाईयं दरसणिज्जं अभिरूवं पडिरूवं ' ति व्याख्या प्राग्वत् ।

' **ऊस्सुक्कं** ' ति अविद्यमानशुल्कग्रहणं, यावत्करणादिदं दृश्यम्— ' **उक्करं** ' क्षेत्रगवादि प्रति अविद्यमानराजदेयद्रव्यम् ' **अभडप्पवेसं** ' कौटुम्बिकगेहेषु राजवर्णवतां भटानामविद्यमानप्रवेशम् '**अदंडिमकुदंडिमं**' दण्डो–निग्रहस्तेन निर्वृत्तं राजदेयतया व्यवस्थापितं दण्डिमं कुदण्डः— असम्यग्निग्रहस्तेन निर्वृत्तं द्रव्यं कुदंडिमं ते अविद्यमाने यत्र प्रमोदेऽसाव-दण्डिमकुदण्डिमोऽतस्तम् ' **अधरिमं** ' ति अविद्यमानं धरिमं–ऋणद्रव्यं यत्र स तथा तम् ' **अधारणिज्जं** ' अविद्यमानाधमर्णम् ' **अणुध्धुय-मुइंगं** ' अनुध्धूता–आनुरूप्येण वादनार्थमुत्क्षिप्ता अनुध्धूता वा–वादना-र्थमेव वादकैरत्यक्ता मृदङ्गा यत्र स तथा ' **अमिलायमल्लदामं** ' अम्लानपुष्पमालं ' **गणियावरनाडइज्जकलियं** ' गणिकावरैर्नाटकीयैः— नाटकपात्रैः कलितो यः स तथा तम् ' **अणेगतालाचराणुचरियं** ' अनेकैः प्रेक्षाकारिभिरासेवितमित्यर्थः, ' **पमुइयपक्कीलियाभिरामं** ' प्रमुदितै प्रक्रीडितैश्च जनैरभिरमणीयं ' **जहारिहं** ' ति यथायोग्यम् ।

**[ पृ. ३५. ] उदाहु सयमेव गच्छित्ता** ' उताहो स्वयमेव गमिष्यसीत्यर्थः

' **नाइविगेट्ठेहिं** ' ति अनत्यन्तदीर्घैः ' **अद्धाणेहिं** ' ति प्रया-णकैः ' **सुहेहिं** ' ति सुखैः—सुखहेतुभिः, ' **वसहिपायरासेहिं** ' ति वासिकप्रातर्भोजनैः ॥

'**जएणं विजएणं वद्धावेइ**' त्ति जयेन विजयेन च रिपूणां वर्द्धस्वेत्येवमाशिषं प्रयुङ्क्ते इत्यर्थः ॥

ननु तीर्थकरा यत्र विहरन्ति तत्र देशे पञ्चविंशतेर्योजनानामादेशान्तरेण द्वादशानां मध्ये तीर्थकरातिशयात् न वैरादयोऽनर्था भवन्ति, यदाह—"पुव्वुप्पन्ना रोगा पसमंति इइवेरमारीओ। अइवुट्ठी अणावुट्ठी न होइ दुब्भिक्ख डमरं च॥ १ ॥" इति।

[ पूर्वोत्पन्ना रोगाः प्रशाम्यन्ति इतिवैरमार्यः। अतिवृष्टिरनावृष्टिर्न भवति दुर्भिक्षं डमरं च॥ १ ॥ ]

तत्कथं **श्रीमन्महावीरे** भगवति **पुरिमताले** नगरे व्यवस्थित एवाभग्नसेनस्य पूर्ववर्णितो व्यतिकरः संपन्नः ? इति। अत्रोच्यते, सर्वमिदमनर्थमर्थजातं प्राणिनां स्वकृतकर्मणः सकाशादुपजायते, कर्म्म च द्वेधा—सोपक्रमं, निरुपक्रमं च, तत्र यानि वैरादीनि सोपक्रमकर्मसंपाद्यानि तान्येव जिनातिशयादुपशाम्यन्ति सदौषधात् साध्यव्याधिवत्, यानि तु निरुपक्रमकर्म्मसंपाद्यानि तानि अवश्यं विपाकतो वेद्यानि नोपक्रमकारणविषयाणि असाध्यव्याधिवत्, अत एव सर्वातिशयसम्पत्समन्वितानां जिनानामप्यनुपशान्तवैरभावा गोशालकादय उपसर्गान् विहितवन्तः ॥

॥ इति विपाकश्रुते अभग्नसेनाख्यतृतीयाध्ययनविवरणम् ॥

———

